# महापुराणम्

१. ब्रह्ममहापुराणम्
२. पद्ममहापुराणम्
३. विष्णुमहापुराणम्
४. शिवमहापुराणम्
५. भागवतमहापुराणम्
६. नारदीयमहापुराणम्
७. मार्कण्डेयमहापुराणम्
८. अग्निमहापुराणम्
९. भविष्यमहापुराणम्
१०. ब्रह्मवैवर्तमहापुराणम्
वासुकी पुराण ::
हरिवंश पुराण .:
कल्किपुराण ::
सौर पुराण::

११. लिंगमहापुराणम्
१२. वाराहमहापुराणम्
१३. स्कन्दमहापुराणम्
१४. वामनमहापुराणम्
१५. कूर्ममहापुराणम्
१६. मत्स्यमहापुराणम्
१७. गरुडमहापुराणम्
१८. ब्रह्माण्डमहापुराणम्
१९. वायुमहापुराणम्
२०. विष्णुधर्मोत्तर पुराणम्
देवीभागवत
भृंगीशसंहिता
एकाम्रपुराण
नरसिंहपुराणम्

क्षेमराज श्रीकृष्णदासेन सम्पादितस्य मुम्बई श्री वेंकटेश्वरस्टीम मुद्रणालयेन प्रकाशितस्य पुनर्मुद्रणम्

# श्रीस्कन्दमहापुराणम्

# THE SKANDAMAHĀPURĀṆAM

षष्ठम् भाग

श्रीनागरखण्डम्




**NAG PUBLISHERS**

*11A/U.A. (POST OFFICE BUILDING) JAWAHAR NAGAR, DELHI-7.*

॥ ॥ श्रीगणेशाय नमः ॥ ॥ ॐनमः पुरुषोत्तमाय ॥ ॥ अथ स्कान्दे महापुराणे षष्ठनागरखण्डप्रारम्भः ॥ ॥ व्यास उवाच ॥ ॥ स धूर्जटिजटाजूटो जायतां विजयाय वः ॥ यत्रैकपलितभ्रांतिं करोत्यद्यापि जाह्नवी ॥ १ ॥ ॥ ऋषय ऊचुः ॥ ॥ हरस्य पूज्यते लिंगं कस्मादेतन्महामते ॥ विशेषात्सं परित्यज्य शेषांगानि सुरासुरैः ॥ २ ॥ तस्मादेतन्महाबाहो यथावद्वक्तुमर्हसि ॥ सांप्रतं सूत कात्स्न्र्येन परं कौतूहलं हि नः ॥ ३ ॥ ॥ सूत उवाच ॥ प्रश्नभारो महानेष यो भवद्भिरुदाहृतः ॥ कीर्तयिष्ये तथाप्येनं नमस्कृत्य स्वयंभुवे ॥ ४॥ आनर्तविषये चास्ति वनं मुनिजनाश्रयम् ॥ मनोज्ञं सर्वसत्त्वानां सर्वर्तुफलितद्रुमम् ॥ ५ ॥ तत्राश्रमपदं रम्यं सौम्यसत्त्वनिषेवितम् ॥ अस्ति तापससंकीर्णं वेदध्वनिविराजितम् ॥ ६ ॥ अब्भक्षैर्वायुभक्षैश्च शीर्णपर्णाशिभिस्तथा ॥ दन्तोलूखलिभिर्विप्रैः सेवितं चाश्मकुट्टकैः ॥ ७ ॥ स्नानहोमपरैश्चैव जपस्वाध्यायतत्परैः ॥ वानप्रस्थैस्त्रिदण्डैश्च हंसैश्चापि कुटीचरैः[3] ॥ ८ ॥ स्नातकैर्यतिभिर्दान्तैस्तथा पंचाग्निसाधकैः ॥ कस्यचित्त्वथ कालस्य भगवांस्त्रिपुरांतकः ॥ ९ ॥ सतीवियोगसंतप्तो भ्रममाण इतस्ततः ॥ तस्मिन्वने समायातः सौम्यसत्त्वनिषेविते ॥ १० ॥ क्रीडंति नकुला यत्र सार्धं सर्पैः प्रहर्षिताः ॥ पञ्चाननाश्च मातंगैर्वृषदंशास्तथाखुभिः ॥ काकाः कौशिकसंघैश्च वैरभावविवर्जिताः ॥ ११ ॥ ततश्च भगवान्रुद्रो दृष्ट्वाश्रमपदं तदा ॥ नग्नः कपालमादाय भिक्षार्थं प्रविवेश सः ॥ १२ ॥ अथ तस्य समालोक्य रूपं गात्रसमुद्भवम् ॥ अदृष्टपूर्वं तापस्यः सर्वाः कामवशं गताः ॥ १३ ॥ गृहकर्म परित्यज्य गुरुशुश्रूषणानि च ॥ मिथः संभाषणं चक्रुः स्थानेस्थाने च ताः स्थिताः ॥ १४ ॥ एका सा कापि धन्या या चक्रे तस्यावगूहनम् ॥ विश्रब्धा सर्वगात्रेषु तापसस्य महात्मनः ॥ १५ ॥ तथान्याः कौतुकाविष्टा धावंत्यः सर्वतोदिशम् ॥ दृश्यंते तं समुद्दिश्य विस्तारितविलोचनाः ॥ १६ ॥ काश्चिदर्द्धानुलिप्तांग्यः काश्चिदेकांजितेक्षणाः ॥ अर्धसंयमितैः केशैस्तथान्यास्त्यक्तबालकाः ॥ १७ ॥ एवमालोक्यमानः स कामिनीभिर्महेश्वरः ॥ बभ्राम राजमार्गेण भिक्षां देहीति कीर्तयन् ॥ १८ ॥ अथ ते मुनयो दृष्ट्वा तं तथा विगतांबरम् ॥ कामोद्भवकरं स्त्रीणां प्रोचुः कोपारुणेक्षणाः ॥ १९ ॥ यस्मात्पाप त्वयास्माकमाश्रमोऽयं विडंबितः ॥ तस्माल्लिंगं पतत्वाशु तवैव वसुधातले ॥ २० ॥ एतस्मिन्नंतरे भूमौ लिंगं तस्य पपात तत् ॥ भित्त्वाथ धरणीपृष्ठं पातालं प्रविवेश ह ॥ २१ ॥ सोऽपि लिंगपरित्यक्तो लज्जायुक्तो महेश्वरः ॥ गर्तां गुर्वीं समाश्रित्य भ्रूणरूपः समाविशत् ॥ २२ ॥ अथ

---

१ कस्मात्--इति पाठान्तरम् । २ ष्द--इ० पा० । ३ कुटीचकैः--इति पाठोऽपेक्षितः । ४ सतीवियोगसंप्राप्तः--इ० पा० । ५ वृषदंशाः--मार्जाराः--इत्यर्थः । ६ गर्ताम्--भूम्यभ्रम्--इत्यर्थः ।

लिंगस्य पातेन त्रैलोक्यभयशंसिनः ॥ उत्पाता दारुणास्तस्थुः सर्वत्र द्विजसत्तमाः ॥२३॥ शीर्यंते गिरिशृंगाणि पतंत्युल्का दिवापि च ॥ त्यजंति सागराः सर्वे मर्यादां च शनैः शनैः ॥ २४ ॥ अथ देवगणाः सर्वे भयसंत्रस्तमानसाः ॥ शक्रविष्णुमुखा जग्मुर्यत्र देवः पितामहः ॥ २५ ॥ प्रोचुश्च प्रणताः स्तुत्वा स्तोत्रैः [1]सुश्रुतिसंभवैः ॥ त्रैलोक्ये सृष्टिरूपं यत्कमलासनसंस्थितम् ॥ २६ ॥ किमिदं किमिदं देव वर्तते ह्यधरोत्तरम् ॥ त्रैलोक्यं सकलं येन व्याकुलत्वमुपागतम् ॥ २७ ॥ प्रलयस्येव चिह्नानि दृश्यंते पद्मसंभव ॥ किं सांप्रतमकालेऽपि भविष्यति परिक्षयः ॥ २८ ॥ सर्वेषां सुरमर्त्यानां दैत्यानां मन्त्रकोविदः ॥ गतिर्भयार्तदेहानां सर्वलोकपितामहः ॥ २९ ॥ तेषां तद्वचनं श्रुत्वा देवानां चतुराननः ॥ उवाच सुचिरं ध्यात्वा ज्ञात्वा दिव्येन चक्षुषा ॥ ३० ॥ प्रलयस्य न कालोऽयं सांप्रतं सुरसत्तमाः ॥ शृणुध्वं यन्निमित्तोत्था महोत्पाता भवन्त्यमी ॥ ३१ ॥ ऋषिभिः पातितं लिंगं [2]देवदेवस्य शूलिनः ॥ शापेनानर्तके देशे कलत्रार्थे महात्मभिः ॥ ३२ ॥ तेनैतद्व्याकुलीभूतं त्रैलोक्यं सचराचरम् ॥ तस्माद्गच्छामहे तत्र यत्र देवो महेश्वरः ॥ ३३ ॥ येनास्मद्वचनाच्छीघ्रं तल्लिंगं निदधाति सः ॥ नो चेद्भविष्यति व्यक्तमकाले [3]चापि संक्षयः ॥ त्रैलोक्यस्यापि कृत्स्नस्य सत्यमेतन्मयोदितम् ॥ ३४ ॥ अथ देवगणाः सर्वे ब्रह्मविष्णुपुरःसराः ॥ आदित्या वसवो रुद्रा विश्वेदेवास्तथाश्विनौ ॥ ३५ ॥ प्रजग्मुस्त्वरितास्तत्र यत्र देवो महेश्वरः ॥ गर्तामध्यगतः सुप्तो [4]लज्जया परया वृतः ॥ ३६ ॥ ॥ देवा ऊचुः ॥ ॥ ॥ नमस्ते देवदेवेश भक्तानामभयप्रद ॥ नमस्ते जगदाधार शशिराजितशेखर ॥ ३७ ॥ त्वं यज्ञस्त्वं वषट्कारस्त्वमापस्त्वं मही विभो ॥ त्वया सृष्टमिदं सर्वं त्रैलोक्यं सचराचरम् ॥ ३८ ॥ त्वं पासि च सुरश्रेष्ठ तथा नाशं नयिष्यसि ॥ त्वं विष्णुस्त्वं चतुर्वक्त्रस्त्वं चंद्रस्त्वं दिवाकरः ॥ ३९ ॥ त्वया विना महादेव न किंचिदिह विद्यते ॥ अपि कृत्वा महत्पापं नरो देव धरातले ॥ ४० ॥ तव नामापि संकीर्त्य प्रयाति त्रिदिवालयम् ॥ महादेव महादेव महादेवेति कीर्तनात् ॥ ४१ ॥ कोटयो ब्रह्महत्यानामगम्यागमकोटयः ॥ सद्यः प्रलयमायांति महादेवेति कीर्तनात् ॥ ४२ ॥ विप्रो यथा मनुष्याणां नदीनां वा महार्णवः ॥ तथा त्वं सर्वदेवानामाधिपत्ये व्यवस्थितः ॥ ४३ ॥ नक्षत्राणां यथा चंद्रः प्रदीप्तानां दिवाकरः ॥ तथा त्वं सर्वदेवानामाधिपत्ये व्यवस्थितः ॥ ४४ ॥ धातूनां कांचनं यद्वद्गंधर्वाणां च नारदः ॥ तथा त्वं सर्वदेवानामाधिपत्ये व्यवस्थितः ॥ ४५ ॥ ओषधीनां यथा सस्यं नगानां हेमपर्वतः ॥ तथा त्वं सर्वदेवानामाधिपत्ये व्यवस्थितः ॥४६॥

१ संस्तुतिसम्भवैः—इ० पा० । २ महादेवस्य—इ० पा० । ३ अकालेनापि—इ० पा० । ४ कलया—इ० पा० ।

तस्मात्कुरु प्रसादं नः सर्वेषां च नृणां विभो ॥ संधारय पुनर्लिंगं स्वकीयं सुरसत्तम ॥ ४७ ॥ नो चेज्जगत्रयं देव नूनं नाशमुपेष्यति ॥ यद्येतद्भूतले लिङ्गं पतति स्थास्यति प्रभो ॥ ४८ ॥ ॥ सूत उवाच ॥ ॥ तेषां तद्वचनं श्रुत्वा भगवान्वृषभध्वजः ॥ प्रोवाच प्रणतान्सर्वांस्तान्देवान्व्रीडयान्वितः ॥ ४९ ॥ मया सतीवियोगार्तियुक्तेन सुरसत्तम ॥ लिंगमेतत्परित्यक्तं शापव्याजाद्द्विजन्मनाम् ॥ ५० ॥ कोऽलं पातयितुं लिंगं ममैतद्भुवनत्रये ॥ देवो वा ब्राह्मणो वापि वेत्थ यूयमपि स्फुटम् ॥ ५१ ॥ तस्मान्नैव धरिष्यामि लिंगमेतद्धरातलात् ॥ किमनेन करिष्यामि भार्यया परिवर्जितः ॥ ५२ ॥ ॥ देवा ऊचुः ॥ ॥ तव कांता सतीनाम या मृता प्राक्सुरोत्तम ॥ सा जाता मेनकागर्भे गौरीनाम हिमाचलात् ॥ ५३ ॥ भविष्यति पुनर्भार्या तवैव त्रिपुरांतक ॥ तस्माल्लिंगं समादाय कुरु क्षेमं दिवौकसाम् ॥ ५४ ॥ ॥ देवदेव उवाच ॥ ॥ अद्यप्रभृति मे लिंगं यदि देवा द्विजातयः ॥ पूजयंति प्रयत्नेन तर्हीदं धारयाम्यहम् ॥ ५५ ॥ ॥ ब्रह्मोवाच ॥ ॥ अहं तव स्वयं लिंगं पूजयिष्यामि शंकर ॥ तथान्ये विबुधाः सर्वे किं पुनर्भुवि मानवाः ॥ ५६ ॥ ततः प्रविश्य पातालं देवैः सार्धं पितामहः ॥ स्वयमेवाकरोत्पूजां तस्य लिंगस्य भक्तितः ॥ ॥ ५७ ॥ तस्मादनंतरं विष्णुः श्रद्धापूतेन चेतसा ॥ तथान्ये विबुधाः सर्वे शक्राद्याः श्रद्धयान्विताः ॥५८॥ ततस्तुष्टो महादेवः पितामहमिदं वचः ॥ प्रोवाच वासुदेवं च विनयावनतं स्थितम् ॥ ५९ ॥ भवद्भ्यां परितुष्टोऽस्मि तस्मान्मत्तः[1] प्रगृह्यताम् ॥ वरमिष्टं महाभागौ यद्यपि स्यात्सुदुर्लभम् ॥ ॥ ६० ॥ ॥ तावूचतुः[2] ॥ ॥ यदि तुष्टोसि देवेश त्रिभागेन समाश्रयम् ॥ आवाभ्यां देहि लिंगेन येनैकत्राश्रयो भवेत् ॥ ६१ ॥ ॥ सूत उवाच ॥ ॥ स तथेति प्रतिज्ञाय लिंगमादाय च प्रभुः ॥ स्थाने नियोजयामास सर्वदेवाधिपूजितम् ॥ ६२ ॥ ततो हाटकमादाय तदाकारं पितामहः ॥ कृत्वा लिंगं स्वयं तत्र स्थापयामास हर्षितः ॥ ६३ ॥ प्रोवाच चाथ भो विप्राः साधुनादेन नादयन्[3] ॥ लोकत्रयं समस्तानां शृण्वतां त्रिदिवौकसाम् ॥ ६४ ॥ मया ह्याद्यं त्विदं लिंगं हाटकेन विनिर्मितम् ॥ ख्यातिं यास्यति सर्वत्र पाताले हाटकेश्वरम्[4] ॥ ६५ ॥ तथान्ये मनुजा ये च हाटकादीनि भक्तितः ॥ मणिमुक्तासुरत्नैश्च कृत्वा लिंगानि कृत्स्नशः ॥ ६६ ॥ त्रिकालं पूजयिष्यंति ते यास्यंति परां गतिम् ॥ मृन्मयं संपरि

---

१ मत्तः-मत्सकाशात्-इत्यर्थः । २ तौ-ब्रह्मविष्णू-इत्यर्थः । ३ नादयन्-इत्यस्य-लोकत्रयम्-इति कर्म । भो विप्राः शौनकादयः अथ साधुनादेन लोकत्रयं नादयन् ब्रह्मा समस्तानां त्रिदिवौकसां शृण्वतां सतामुवाच-इति योजना । ४ इदं हाटकेश्वरक्षेत्रस्थानमिदानीं गुर्जरप्रान्ते 'वढनगर' नामकग्रामे सुप्रसिद्धमस्ति-उमापुरं च 'उंझा' इति प्रसिद्धं तन्निकटवर्त्येव उमादेवीस्थानमस्ति ।

त्यज्य नीचधातुमयं[1] तथा ॥ ६७ ॥ एवमुक्त्वा चतुर्वक्त्रः सह सर्वैर्दिवालयैः ॥ जगाम त्रिदिवं सोऽपि कैलासं शशिशेखरः ॥ ६८ ॥ एतस्मात्कारणाल्लिंगं पूज्यतेऽत्र सुरासुरैः ॥ हरस्य चोत्तमांगानि परित्यज्य विशेषतः ॥ ६९ ॥ ततःप्रभृति तल्लिंगं स्वयं ब्रह्मा व्यवस्थितः ॥ भगवान्वासुदेवश्च तेन पूज्यं शिवं हि तत्[2] ॥ ७० ॥ यस्तु पूजयते नित्यं श्रद्धायुक्तेन चेतसा ॥ त्र्यंबकाच्युतब्रह्माद्यास्तेन स्युः पूजितास्त्रयः ॥ ७१ ॥ तस्मात्सर्वप्रयत्नेन शिवलिंगं प्रपूजयेत् ॥ स्पर्शयेदीक्षयेन्नित्यं कीर्तयेच्च द्विजोत्तमाः ॥ ७२ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये लिंगोत्पत्तिवर्णनंनाम प्रथमोऽध्यायः ॥ १ ॥[3] ॥ छ ॥

॥ ॥ सूत उवाच ॥ ॥ तस्मिन्नुत्पाटिते लिंगे भूतलाद्द्विजसत्तमाः ॥ पातालाज्जाह्नवीतोयं तेन मार्गेण निःसृतम् ॥ सर्वपापहरं नृणां सर्वकामप्रदायकम् ॥ १ ॥ तत्र स्वयमभूत्पूर्वं यत्तद्द्विजवरोत्तमाः ॥ शृणुध्वं वदतो मेऽद्य लोकविस्मयकारकम् ॥ २ ॥ त्रिशंकुर्नाम राजेंद्रश्चंडालत्वं समागतः ॥ तत्र स्नातः पुनर्लेभे शरीरं पार्थिवोचितम् ॥ ३ ॥ ॥ ऋषय ऊचुः ॥ ॥ चंडालत्वं कथं प्राप्तस्त्रिशंकुर्नृपसत्तमः ॥ एतत्त्वं सर्वमाचक्ष्व विस्तरात्सूतनन्दन ॥ ४ ॥ ॥ सूत उवाच ॥ ॥ अहं वः कीर्तयिष्यामि कथामेतां पुरातनीम् ॥ सर्वपापहरां मेध्यां त्रिशंकुनृपसंभवाम् ॥ ५ ॥ सूर्यवंशोद्भवः पूर्वं त्रिशंकुरिति विश्रुतः ॥ आसीत्पार्थिवशार्दूलः शार्दूलसमविक्रमः ॥ ६ ॥ वसिष्ठस्य मुनेः शिष्यो यज्वा दानपतिः प्रभुः ॥ तेनेष्टं च मखैः सर्वैरग्निष्टोमादिभिः सदा ॥ ७ ॥ संपूर्णदक्षिणैरेव वत्सरं वत्सरं प्रति ॥ तथा दानानि सर्वाणि प्रदत्तानि महात्मना ॥ ८ ॥ ब्राह्मणेभ्यो विशिष्टेभ्यो दीनेभ्यश्च विशेषतः ॥ व्रतानि च प्रचीर्णानि रक्षिताः शरणागताः ॥ ९ ॥ पुत्रवल्लालिता लोकाः शत्रवश्च निषूदिताः ॥ भ्रांतानि भूतले यानि तीर्थान्यायतनानि च ॥ तपस्विभ्यो यथाकामं यच्छता वांछितं धनम् ॥ १० ॥ कस्यचित्त्वथ कालस्य वसिष्ठो भगवान्मुनिः ॥ तेन प्रोक्तः सभामध्ये संस्थितो नतिपूर्वकम् ॥ ११ ॥ ॥ त्रिशंकुरुवाच ॥ ॥ भगवन्यष्टुमिच्छामि तेन यज्ञेन सांप्रतम् ॥ गम्यते त्रिदिवं येन सशरीरेण सत्वरम् ॥ १२ ॥ तस्मात्कुरु प्रसादं मे संभारानाहर द्रुतम् ॥ तस्य यज्ञस्य सिद्ध्यर्थं यथार्हा

१ नीचधातुमयम्--लोहमयम्--इत्यर्थः । २ तु--इ० पा० । ३ एतदग्रे--सर्वेषु पुस्तकेषु--यावत्खण्डसमाप्ति--'तृतीय परिच्छेदे'--इति पाठो वर्त्तते--स किमभिप्रायक इति न ज्ञायते किं--नागरखण्ड एव--पूर्वं--प्रथमद्वितीयपरिच्छेदौ गतप्रायावाहोस्वित्--समग्रस्कान्दमहापुराणे--.. तखण्डात्मके परिच्छेदत्रयकल्पनां विधाय षष्ठसप्तमखण्डयोस्तृतीयपरिच्छेदत्वेन--कल्पना कृतास्तीति वा न तत्त्वतोऽवगम्यते, तदेतत्सुधीभिः साधु विचार्यैवेदितव्यम् । अस्माभिस्तु--एतत्पूर्वं क्वचिदपि--'प्रथमपरिच्छेदे, द्वितीयपरिच्छेदे' इति पाठः समतीतेषु पंचसु खण्डेषु न दृष्टोऽतोऽत्र 'तृतीयपरिच्छेदे' इति पाठः समाप्तिदण्डके न निवेशितः--इति विदांकुर्वंतु विदांवराः ।

न्ब्राह्मणांस्तथा ॥ १३ ॥ ॥ वसिष्ठ उवाच ॥ ॥ न स कश्चित्क्रतुर्येन गम्यते त्रिदिवं नृप ॥ अनेनैव शरीरेण सत्यमेतद्ब्रवीम्यहम् ॥ १४ ॥
अग्निष्टोमादयो यज्ञा ये प्रोक्ताः प्राक्स्वयंभुवा ॥ अन्यदेहांतरे स्वर्गः प्राप्यते तैः कृतैर्नृप ॥१५॥ यदि वा पृथिवीपाल त्वया यज्ञप्रभावतः ॥ पार्थिवो
वा द्विजो वाथ वैश्यो वान्यतरोऽपि वा ॥ १६ ॥ स्वयं दृष्टः श्रुतो वापि संजातोऽत्र धरातले ॥ स्वर्गं गतः शरीरेण सहितस्तत्प्रकीर्तय ॥ १७ ॥
॥ ॥ त्रिशंकुरुवाच ॥ ॥ नासाध्यं विद्यते ब्रह्मंस्तवाहं वेद्मि तत्त्वतः ॥ तस्मात्कुरु प्रसादं मे यथा स्यान्मनसेप्सितम् ॥ १८ ॥ ॥ वसिष्ठ उवाच ॥
अनृतं नोक्तपूर्वं मे स्वैरेष्वपि हि जिह्वया ॥ तस्मान्नास्ति मखः कश्चित्सत्यं त्वं यष्टुमिच्छसि ॥ १९ ॥ ॥ त्रिशंकुरुवाच ॥ ॥ यदि मां विप्रशा
र्दूल न त्वं याजयितुं क्षमः ॥ स्वर्गप्रदेन यज्ञेन वपुषानेन वै विभो ॥ २० ॥ तत्किं ते तपसः शक्त्या ब्राह्मणस्य विचक्षण ॥ अपरं शृणु मे वाक्यं
यद्ब्रवीमि परिस्फुटम् ॥ शृण्वतां मुनिवृन्दानां तथान्येषां द्विजोत्तम ॥ २१ ॥ यदि मे न करोषि त्वं वचनं वदतोऽसकृत् ॥ तेन यज्ञेन यक्ष्येऽहं
तत्कृत्वान्यं द्विजं गुरुम् ॥ २२ ॥ ॥ सूत उवाच ॥ ॥ तस्य तद्वचनं श्रुत्वा वसिष्ठो भगवांस्ततः ॥ तमुवाच विहस्योच्चैः कुरुष्वैवं महीपते ॥
॥ २३ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्र माहात्म्ये त्रिशंकूपाख्याने त्रिशंकुवसिष्ठसंवाद
वर्णनंनाम द्वितीयोऽध्यायः॥ २ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ ततः प्रणम्य भूयः स वसिष्ठं मुनिपुंगवम् ॥ ययौ तत्र सुतास्तस्य यत्र ते शतसंख्यकाः
॥ १ ॥ तानपि प्राह नत्वा स तमेवार्थं नराधिपः॥ वसिष्ठवचनं कृत्स्नं तस्य तैरपि शंसितम् ॥ २ ॥ ततस्तान्स पुनः प्राह युष्माकं जनकोऽधुना ॥
अशक्तो मा दिवं नेतुं सशरीरं विसर्जितः ॥ ३ ॥ तस्माद्यदि न मां यूयं याजयिष्यथ सांप्रतम् ॥ परित्यज्य करिष्यामि शीघ्रमन्यं पुरोहितम् ॥४॥
यो मां यज्ञप्रभावेन नयिष्यति सुरालयम् ॥ अनेनैव शरीरेण सहितं गुरुपुत्रकाः॥५॥ तस्य तद्वचनं श्रुत्वा सर्वे ते मुनिसत्तमाः॥ परं कोपं समावि
ष्टास्तमूचुः परुषाक्षरैः ॥ ६ ॥ यस्मात्त्वया गुरुस्त्यक्तो हितकृत्पापवानसि ॥ तस्माद्भवाधुना पाप चंडालो लोकनिंदितः ॥ ७ ॥ अथ तद्वचनांते स
तत्क्षणात्पृथिवीपतिः ॥ बभूवांत्यजरूपाढ्यो विकृताकारदेहभृत् ॥ ८ ॥ यवमध्यः कृशग्रीवः पिंगाक्षो भुग्ननासिकः ॥ कृष्णांगः शंकुवर्णश्च दुर्गंधेन
समावृतः ॥ ९ ॥ अथात्मानं समालोक्य विकृतं स नराधिपः ॥ चण्डालधर्मिणं सद्यो लज्जयाऽधोमुखः स्थितः ॥ १० ॥ याहियाहीति विप्रै

१ प्रकांक्षय–इ० पा० । २ प्रष्टुम्–इ० पा० । ३ विवक्षया–इ० पा० । ४ प्रणम्य भूपतिस्तं वै–इ० पा० । ५ मर्दलोदरः कृशग्रीवः–इ०पा० । ६ भग्ननासिकः–इ०पा० । ७ चण्डालधर्मिणम्- इदम् 'आत्मानम्' इत्यस्य विशेषणं बोद्धव्यम् ।

स्तैर्भर्त्स्यमानो मुहुर्मुहुः ॥ सर्वतः सारमेयैश्च क्लिश्यमानो निरर्गलैः ॥ काककोकिलसंकाशो जीर्णवस्त्रावगुंठितः ॥ ११ ॥ ततः स चिन्तयामास दुःखेन महता वृतः ॥ किं करोमि क्व गच्छामि कथं शांतिर्भविष्यति ॥ १२ ॥ किं मयैतत्सुमूर्खेण वांछितं दुर्लभं पदम् ॥ तत्प्रभावेन विभ्रष्टः कुलधर्मोऽपि मे स्वकः ॥ १३ ॥ किं जलं प्रविशाम्यद्य किं वा दीप्तं हुताशनम् ॥ भक्षयामि विषं किं वा कथं स्यान्मृत्युरद्य मे ॥ १४ ॥ अनेन वपुषा दारान्वीक्षयिष्यामि तान्कथम् ॥ तादृशेन शरीरेण याभिः संक्रीडितं मया ॥ १५ ॥ कथं पुत्रांस्तथा पौत्रान्सुहृत्संबंधिबांधवान् ॥ वीक्षयिष्यामि तान्भूयस्तथान्यं सेवकं जनम् ॥ १६ ॥ ये मया निर्जिताः सर्वे रिपवः संगरे पुरा ॥ १५ ॥ तेऽद्य मामीदृशं श्रुत्वा हर्षं यास्यंति निर्भयाः ॥ १७ ॥ ये मया तर्पिता दानैर्ब्राह्मणा वेदपारगाः ॥ तेऽद्य मामीदृशं श्रुत्वा संभविष्यंति दुःखिताः ॥ १८ ॥ तथा ये सुहृदोऽभीष्टा नित्यं मम हिते रताः ॥ कामवस्थां प्रयास्यन्ति दृष्ट्वा मां स्थितमीदृशम् ॥ १९ ॥ भद्रजातया गजा ये मे मदान्धाः षष्टिहायनाः ॥ मया विना मिथो युद्धे कस्तानद्य नियोक्ष्यति[२] ॥ २० ॥ अश्वास्तित्तिरकल्माषाः सुदांताः सादिभिर्दृढैः ॥ कस्तांश्चित्रपदन्यासैर्नियाम्यति मया विना ॥ २१ ॥ तथा मे भृत्यवर्गास्ते कुलीना युद्धदुर्मदाः ॥ मां विना कस्य यास्यंति समीपेऽद्य सुदुःखिताः ॥ २२ ॥ संख्याहीनस्तथा कोशस्तादृङ्मे बहुरत्नभाक् ॥ कस्य यास्यति संभोगं मया हीनस्तु रक्षितः ॥ २३ ॥ तथा मे संख्यया हीनं धान्यं गोजाविकं महत् ॥ भविष्यति कथं हीनं मया भीष्टैस्तु रक्षितम् ॥ २४ ॥ एवं बहुविधं राजा स विलप्य च दुःखितः ॥ जगाम नगराभ्याशं पद्भ्यामेव शनैःशनैः ॥ २५ ॥ ततो रात्रौ समासाद्य स्वं पुरं जनवर्जितम् ॥ द्वारे स्थित्वा समाहूय पुत्रं मंत्रिभिरन्वितम् ॥२६॥ कथयामास वृत्तांतं सर्वं शापसमुद्भवम् ॥ दूरे स्थितः स पुत्राणां वसिष्ठस्य महात्मनः ॥२७॥ वज्रपातोपमं वाक्यं तेऽपि तस्य निशम्य तत् ॥ बाष्पपर्याकुलैरास्यै रुरुदुः शोकसंयुताः ॥ २८ ॥ हा नाथ हा महाराज हा नित्यं धर्मवत्सल ॥ त्वया हीना भविष्यामः कथमद्य सुदुःखिताः ॥ २९ ॥ किमेतद्युज्यते तेषां वासिष्ठानां दुरात्मनाम् ॥ शापं ददुः स्वयाज्यस्य विशेषाद्विनतस्य च ॥३०॥ ते वयं राजशार्दूल परित्यज्य गृहादिकम् ॥ अन्त्यजत्वं गमिष्यामस्त्वया सार्धमसंशयम् ॥३१॥ ॥त्रिशंकुरुवाच॥ भक्तिश्चेदस्ति युष्माकं ममोपरि निरर्गला॥तन्मे पुत्रस्य मंत्रित्वं[३] सर्वे कुरुत सांप्रतम्॥३२॥हरिश्चंद्रः सुपुत्रोयं मम ज्येष्ठः सुवल्लभः॥नियोजयध्वमव्यग्राः पदव्यां मम सत्वरम्॥३३॥अहं पुनः करिष्यामि यन्मे मनसि संस्थितम्॥मृत्युं वा संप्रयास्यामि सदेहो वा सुरालयम्॥३४॥एवमुक्त्वा परित्यज्य सर्वां

१ कीर्तयिष्यामि इ० पा० । २ नियोक्ष्यति--इ०पा० । ३ मित्रत्वम्--इ०पा० ।

स्तान्स महीपतिः ॥ जगामारण्यमाश्रित्य पद्भ्यामेव शनैः शनैः॥२५॥तेपि सन्मंत्रिणस्तूर्णं पुत्रं तस्य सुसम्मतम् ॥ राज्ये नियोजयामासुर्नादवादित्रनिःस्वनैः ॥ २६ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये त्रिशंकूपाख्याने हरिश्चन्द्रराज्योपलंभोनाम तृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ त्रिशंकुरिति संचिन्त्य विश्वामित्रं महामुनिम् ॥ मनसा सुचिरं कालं ततश्चक्रे विनिश्चयम् ॥ १ ॥ विश्वामित्रं परित्यज्य नान्योस्ति भुवनत्रये ॥ यः कुर्यान्मे परित्राणं दुःखादस्मात्सुदारुणात् ॥ २ ॥ कुरुक्षेत्रं समुद्दिश्य प्रतस्थे स ततः परम् ॥ सुश्रांतः क्षुत्पिपासार्तो मार्गपृच्छापरायणः ॥ ३ ॥ ततः कालेन संप्राप्य कुरुक्षेत्रं स पार्थिवः ॥ यत्नेनान्वेषयामास विश्वामित्राश्रमं ततः ॥ ४ ॥ एवं चान्वेषमाणेन तेन भूमिभृता तदा ॥ सुदूरादेव संदृष्टं नीलद्रुमकदम्बकम् ॥ ५ ॥ उपरिष्टाद्बकैर्हंसैर्भ्रममाणैः समंततः ॥ आटिभिर्मद्गुभिश्चैव समन्ताज्जलपक्षिभिः ॥ ६ ॥ स मत्वा सलिलं तत्र पिपासार्तो महीपतिः ॥ प्रतस्थे सत्वरो हृष्टो जलवातहृतक्लमः ॥ ७ ॥ अथापश्यन्मनोहारि सौम्यसत्त्वनिषेवितम् ॥ आश्रमं नंदितीरस्थं[1] मनःशोकविनाशनम् ॥ ८ ॥ पुष्पितैः फलितैर्वृक्षैः समंतात्परिवारितम् ॥ विविधैर्मधुरारावैर्नादितं विहगोत्तमैः ॥ ९ ॥ क्रीडंति नकुलाः सर्पैरुलूका यत्र वायसैः ॥ मूषकैर्वृषदंशाश्च द्वीपिनो विविधैर्मृगैः ॥ १० ॥ अथापश्यन्नदीतीरे स तपस्विगणावृतम् ॥ स्वाध्यायनिरतं दांतं विश्वामित्रं तपोनिधिम् ॥ ११ ॥ तेजसा तपसातीव दीप्यमानमिवानलम् ॥ चीरवल्कलसंवीतं शालवृक्षं समाश्रितम् ॥ १२ ॥ अथ गत्वा स राजेन्द्रो दूरस्थोऽपि प्रणम्य तम् ॥ अष्टांगेन प्रणामेन स्वनाम परिकीर्तयन् ॥ १३ ॥ तथान्यानपि तच्छिष्यान्कृताञ्जलिपुटः स्थितः ॥ यथाक्रमं यथाज्येष्ठं[2] श्रद्धया परया युतः ॥ १४ ॥ धूलिधूसरितांगं तं ते तु दृष्ट्वा महीपतिम् ॥ चंडाल इति मन्वाना श्चिह्नैर्गात्रसमुद्भवैः ॥ १५ ॥ भर्त्सयामासुरेवाथ वचनैः परुषाक्षरैः ॥ धिक्छब्दैश्च तथैवान्ये याहियाहीति चासकृत् ॥ १६ ॥ कस्त्वं पापेह संप्राप्तो मुनीनामाश्रमोत्तमे ॥ वेदध्वनिसमाकीर्णे साधूनामपि दुर्लभे १७ ॥ तस्माद्गच्छ द्रुतं यावन्न कश्चित्तापसस्तव ॥ दत्त्वा शापं करोत्याशु प्राणानामपि संक्षयम् ॥ १८ ॥ ॥ त्रिशंकुरुवाच ॥ ॥ त्रिशंकुर्नाम भूपोऽहं सूर्यवंशसमुद्भवः ॥ शप्तो वसिष्ठपुत्रैश्च चंडालत्वे नियोजितः ॥ १९ ॥ सोऽहं शरणमापन्नः शापमुक्त्यै द्विजोत्तमाः॥ विश्वामित्रं जगन्मित्रं नान्या मेऽस्ति गतिः परा ॥२०॥ ॥ ॥ विश्वामित्र उवाच ॥ ॥ वसिष्ठस्य भवान्याज्यस्तत्पुत्राणां विशेषतः ॥ तत्कस्मादीदृशे पापे तैस्त्वमद्य नियोजितः ॥ २१ ॥ कोऽप

---

१ नदितीरस्थम्–ह्रस्व आर्षः । नदीतीरस्थम् । नंदितीरस्थम्–इ०, नंदिनीरस्थम्–इ० च पा० ।     २ यथाश्रेष्ठम्–इ० पा० ।

राधस्त्वया तेषां कृतः पार्थिवसत्तम ॥ प्राणद्रोहः कृतः किं वा दारधर्षणसंभवः ॥ २२ ॥ ॥ त्रिशंकुरुवाच ॥ ॥ अनेनैव शरीरेण स्वर्गाय गमनं प्रति ॥ मया संप्रार्थितो यज्ञो वसिष्ठान्मुनिसत्तमात् ॥ २३ ॥ तेनोक्तं न स यज्ञोऽस्ति येन स्वर्गे प्रगम्यते ॥ अनेनैव शरीरेण मुक्त्वा देहांतरं नृप ॥ २४ ॥ तच्छ्रुत्वा स मया प्रोक्तो यदि मां न नयिष्यति ॥ स्वर्गं चानेन कायेन सद्यो यज्ञप्रभावतः ॥ २५ ॥ तदन्यं गुरुमेवाद्य कर्ताहं नास्ति संशयः॥ एतज्ज्ञात्वा मुनिः प्राह यत्क्षेमं तत्समाचर ॥ २६ ॥ ततोऽहं तेन संत्यक्तस्तत्पुत्रान्प्राप्य निष्ठुरान्॥ प्रोक्तवानथ तत्सर्वं यद्वसिष्ठस्य कीर्तितम् ॥२७॥ ततस्तैः शोकसंतप्तैः शप्तोस्मि मुनिसत्तम ॥ नीतश्चेमां दशां पापां चंडालत्वे नियोजितः ॥२८॥ सोऽहं त्वां मनसा ध्यात्वा सुदूरादिह सगतः ॥ आशां गरीयसीं कृत्वा कुरुक्षेत्रे मुनीश्वर ॥ २९ ॥ नासाध्यं विद्यते किंचित्त्रिषु लोकेषु ते मुने ॥ तस्मात्कुरु प्रतीकारं दुःखितस्य ममाधुना ॥ ३० ॥ ॥ सूत उवाच ॥ ॥ तस्य तद्वचनं श्रुत्वा विश्वामित्रो मुनीश्वरः ॥ वसिष्ठस्पर्धयोवाच मुनिमध्ये व्यवस्थितः ॥ ३१ ॥ अहं त्वां याजयिष्यामि तेन यज्ञेन पार्थिव ॥ गच्छसि त्रिदिवं येन इष्टमात्रेण तत्क्षणात् ॥ ३२ ॥ त्वमेवं विहितो भूप वासिष्ठैरंत्यजस्तु तैः ॥ मया भूयोऽपि भूपालः कर्तव्यो नात्र संशयः ॥ ३३ ॥ तस्मादागच्छ भूपाल तीर्थयात्रां मया सह ॥ कुरु तीर्थप्रभावेण येन त्वं स्याः शुचिः पुनः ॥ ३४ ॥ तथा यज्ञक्रियार्हश्च चंडालत्वविवर्जितः ॥ नास्ति तत्पातकं यद्वै तीर्थस्नानान्न नश्यति ॥ ३५ ॥ ॥ सूत उवाच ॥ ॥ एवं स निश्चयं कृत्वा गाधिपुत्रो मुनीश्वरः ॥ त्रिशंकुं पृष्ठतः कृत्वा तीर्थयात्रामथाव्रजत् ॥ ३६ ॥ कुरुक्षेत्रे सरस्वत्यां प्रभासे कुरुजांगले ॥ पृथूदके गयाशीर्षे नैमिषे पुष्करत्रये ॥ ३७ ॥ वाराणस्यां प्रयागे च केदारे श्रवणे नदे ॥ चित्रकूटे च गोकर्णे शालिग्रामेऽचलेश्वरे ॥ ३८ ॥ शुक्लतीर्थे सुराज्याख्ये दृषद्वति नदे शुभे ॥ अथान्येषु सुपुण्येषु तीर्थेष्वायतनेषु च ॥ ३९ ॥ एवं तस्य नरेंद्रस्य सार्धं तेन महात्मना ॥ अतिक्रांतो महान्कालो भ्रममाणस्य भूतले ॥ ४० ॥ मुच्यते न च पापेन चंडालत्वेन स द्विजाः ॥ एवंविधेषु तीर्थेषु स्नातोपि च पृथक्पृथक् ॥ ४१ ॥ ततः क्रमात्समायातः सोऽर्बुदं पर्वतं प्रति ॥ तत्रारुह्य समालोक्य पापघ्नमचलेश्वरम् ॥४२॥ यावदायतनात्तस्मान्निर्गच्छति मुनीश्वरः ॥ तावत्तेनेक्षितो नाममार्कंडो मु[illegible] सत्तमः॥ ४३ ॥ सोऽपि दृष्ट्वा जगन्मित्रं विश्वामित्रं मुनीश्वरम् ॥ प्रोवाचाथ कुतः प्राप्तः सांप्रतं त्वं मुनीश्वर ॥४४॥ कोऽयं तवानुगो रौद्रो दृ[illegible]यते ऽंत्यजाकृतिः ॥ एतत्सर्वं समाचक्ष्व पृच्छतो मम सन्मुने ॥ ४५ ॥ ॥ विश्वामित्र उवाच ॥ ॥ एष पार्थिवशार्दूलस्त्रिशंकुरिति विश्रुतः ॥ वसिष्ठस्य सुतैर्नीत

१ श्वतैः--इ० पा० । २ यद्यत्--इ० पा० । ३ श्रवणे नदे--शोणनदे--इत्यर्थः । प्रवणे नदे--इ० पा० । ४ तत्रालोक्य महादेवम्--इ० पा० । ५ नाममार्कंडः--मार्कंडोनाम--इत्यर्थः ।

श्वंडालत्वं प्रकोपतः ॥ ४६ ॥ मया चास्य प्रतिज्ञातं सप्तद्वीपवतीं महीम् ॥ प्रभ्रमिष्याम्यहं यावन्मेध्यत्वं त्वमुपेष्यसि ॥ ४७ ॥ भ्रांतोऽहं भूतले यानि तीर्थान्यायतनानि च ॥ नचैष मेध्यतां प्राप्तः परिश्रांतोस्मि सांप्रतम् ॥ ४८ ॥ तस्मात्सर्वां महीं त्यक्त्वा लज्जया परया युतः ॥ द्वीपान्म हार्णवांस्त्यक्त्वा संप्रयास्याम्यतः परम् ॥ ४९ ॥ मा वसिष्ठस्य पुत्राणामुपहासपदं गतः ॥ प्रतिज्ञारहितो विप्र सत्यमेतद्ब्रवीम्यहम् ॥ ५० ॥ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ यद्येवं मुनिशार्दूल कुरुष्व वचनं मम ॥ सप्तद्वीपवतीं पृथ्वीं मा त्यक्त्वा कुत्रचिद्व्रज ॥ ५१ ॥ एतस्मात्पर्वता त्क्षेत्रं हाटकेश्वरसंज्ञितम् ॥ अस्ति नैर्ऋतदिग्भागे देशे चानर्तसंज्ञके ॥ ५२ ॥ तत्राद्यं स्थापितं लिंगं हाटकेन सुरोत्तमैः ॥ यत्तत्संकीर्त्यते लोके पाताले हाटकेश्वरम् ॥ ५३ ॥ पातालजाह्नवीतोयं यत्रैवास्ति द्विजोत्तम ॥ उद्धृते शंभुना लिंगे विनिष्क्रांतं रसातलात् ॥ ॥ ५४ ॥ तत्र प्रविश्य यत्नेन पातालं वसुधाधिपः ॥ करोतु जाह्नवीतोये स्नानं श्रद्धासमन्वितः ॥ ५५ ॥ पश्चात्पश्यतु तल्लिंगं हाटकेश्वर संज्ञितम् ॥ भविष्यति ततः शुद्धश्चंडालत्वविवर्जितः ॥ ५६ ॥ त्वमपि प्राप्स्यसि श्रेयः परं हृदयसंस्थितम् ॥ ततोन्यदपि यत्किंचित्तत्रैव तपसि स्थितः ॥ ५७ ॥ ॥ सूत उवाच ॥ ॥ तस्य तद्वचनं श्रुत्वा विश्वामित्रो मुनीश्वरः ॥ त्रिशंकुना समायुक्तो गतस्तत्र द्रुतं ततः ॥ ५८ ॥ पाताले देवमार्गेण प्रविश्य नृपसत्तमम् ॥ त्रिशंकुं स्नापयामास विधिदृष्टेन कर्मणा ॥ ५९ ॥ स्नातमात्रोथ राजा स हाटकेश्वरदर्शनात् ॥ चंडालत्वेन निर्मुक्तो बभूवार्कसमद्युतिः ॥ ६० ॥ ततस्तं स मुनिः प्राह प्रणतं गतकल्मषम् ॥ दिष्ट्या मुक्तोसि राजेंद्र चंडालत्वेन सांप्रतम् ॥ ६१ ॥ दिष्ट्या प्राप्तः परं तेजो दिष्ट्या प्राप्तः परं तपः ॥ तस्माद्यजस्व सत्रेण विधिवद्दक्षिणावता ॥ ६२ ॥ येन संप्राप्स्यसे सिद्धिं नित्यं या हृदये स्थिता ॥ त्वत्कृते प्रार्थयिष्यामि स्वयं गत्वा पितामहम् ॥ ६३ ॥ मखांशं सर्वदेवाद्यो येन गृह्णाति ते मखे ॥ तस्मादत्रैव संभारान्सर्वान्यज्ञसमुद्भवान् ॥ आनय ब्रह्मलोकाच्च यावदागमनं मम ॥ ६४ ॥ बाढमित्येव सोऽप्याह स मुनिः संशितव्रतः ॥ पितामह मुपागम्य प्रणिपत्याब्रवीद्वचः ॥ ६५ ॥ याजयिष्याम्यहं भूपं त्रिशंकुं प्रपितामह ॥ मानुषेण शरीरेण येन गच्छति ते पदम् ॥ ६६ ॥ तस्मादा गच्छ तत्र त्वं यज्ञवाटं पितामह ॥ सर्वैः सुरगणैः सार्धं शिवविष्णुपुरःसरैः ॥ ६७ ॥ प्रगृहाण स्वहस्तेन यज्ञभागं यथोचितम् ॥ सशरीरो दिवं याति येनासौ त्वत्प्रसादतः ॥ ६८ ॥ ॥ ब्रह्मोवाच ॥ ॥ न यज्ञ[1]णा स्वर्गः स्वेन कायेन लभ्यते ॥ मुक्त्वा देहांतरं ब्रह्मंस्तस्मान्मैवं वदस्व

१ तेन पापेन--इ०पा० ।

माम् ॥ ६९ ॥ वयमग्निमुखाः सर्वे हविर्गृह्णामहे मखे ॥ वेदोक्तविधिना सम्यग्यजमानहिताय वै ॥ ७० ॥ तस्माद्वह्निमुखे भूयः स जुहोतु हविर्द्विज ॥ ततः संप्राप्स्यति स्वर्गं त्वत्प्रसादादसंशयम् ॥ ७१ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये त्रिशंकूपाख्याने विश्वामित्रकृतत्रिशंकुयाजनोपक्रमवर्णनंनाम चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ तच्छ्रुत्वा ब्रह्मणो वाक्यं विश्वामित्रो रुषान्वितः ॥ पितामहमुवाचेदं पश्य मे तपसो बलम् ॥ १ ॥ याजयित्वा त्रिशंकुं तं विधिवद्दक्षिणावता ॥ यज्ञे यात्रान यिष्यामि पश्यतस्ते पितामह ॥ २ ॥ एवमुक्त्वा द्रुतं गत्वा विश्वामित्रो धरातलम् ॥ चकार याजने यत्नं त्रिशंकोः सुमहात्मनः ॥ ३ ॥ ददौ दीक्षां समाहूय ब्राह्मणान्वेदपारगान् ॥ यज्ञकर्मोचिते काले तस्मिन्नेव वने शुभे ॥ ४ ॥ बभूव स स्वयं धीमानध्वर्युर्यज्ञकर्मणि ॥ तस्मिन्होता च शांडिल्यो ब्रह्मा गौतम एव च ॥ ५ ॥ आग्नीध्रश्च्यवनोनाम मैत्रावरुणः कार्मिकः ॥ उद्गाता याज्ञवल्क्यश्च प्रतिहर्ता च जैमिनिः ॥ ६ ॥ प्रस्तोता शंकुवर्णश्च तथोन्नेता च गालवः ॥ पुलस्त्यो ब्राह्मणाच्छंसी होता गर्गो मुनीश्वरः ॥ ७ ॥ नेष्टा चैव तथात्रिस्तु अच्छावाको भृगुः स्वयम् ॥ तान्सर्वानृत्विजश्चक्रे त्रिशंकुः श्रद्धयान्वितः ॥ ८ ॥ वासोभिर्मुकुटैश्चैव केयूरैः समलंकृतान् ॥ कृत्वा केशपरित्यागं दधत्कृष्णाजिनं तथा ॥ ९ ॥ ऐणशृंगसमायुक्तः पयोव्रतपरायणः ॥ दीर्घसत्राय तान्सर्वान्योजयामास वै ततः ॥ १० ॥ एवं तस्मिन्प्रवृत्ते च दीर्घसत्रे यथोचिते ॥ आजग्मुर्ब्राह्मणा दिव्या वेदवेदांगपारगाः ॥ ११ ॥ तथान्ये तार्किकाश्चैव गृहस्थाः कौतुकान्विताः ॥ दीनांधकृपणाश्चैव ये चान्ये नटनर्तकाः ॥ १२ ॥ दीयतां दीयतामाशु एतेषामेतदेव हि ॥ भुज्यतांभुज्यतां लोकाः प्रसादः क्रियतामिति ॥ १३ ॥ इत्येष निनदस्तत्र श्रूयते सततं महान् ॥ यज्ञवाटे सदा तस्मिन्नान्यश्चैव कदाचन ॥ १४ ॥ तत्र सस्यमयाः शैला दृश्यंते परिकल्पिताः ॥ सुवर्णस्य च रूप्यस्य रत्नानां च विशेषतः ॥ १५ ॥ दानार्थं ब्राह्मणेंद्राणामसंख्याश्चापि धेनवः ॥ तथैव वाजिनो दांता मदोन्मत्ता महागजाः ॥ १६ ॥ समंतात्कल्पितास्तत्र दृश्यंते पर्वतोपमाः ॥ वर्तमाने महायज्ञे तस्मिन्नेव सुविस्तरे ॥ १७ ॥ आहूता यज्ञभागाय नाभिगच्छंति देवताः ॥ केवलं वह्निवक्त्रेण तस्य गृह्णंति तद्धविः ॥ १८ ॥ एवं द्वादशवर्षाणि यजतस्तस्य भूपतेः ॥ व्यतीतानि न संप्राप्तमभीष्टं मनसः फलम् ॥ १९ ॥ ततश्चावभृथस्नानं कृत्वा सत्रसमाप्तिजम् ॥ ऋत्विजस्तर्पयित्वा तान्दक्षिणाभिर्यथार्हतः ॥ २० ॥ विससर्ज समस्तांश्च तथान्यानपि संगतान् ॥ संबंधिनो वयस्यांश्च त्रिशंकुर्मुनिसत्तमाः ॥ २१ ॥

---

१ संप्राप्स्यते स्वर्गस्त्वत्प्रसादान्न संशयः–इ०पा० । २ सत्रस्य चान्त्यजम्–इ० पा० ।

ततः प्रोवाच विनतो विश्वामित्रं मुनीश्वरम् ॥ स भूपो व्रीडया युक्तः प्रणिपातपुरःसरम् ॥ २२ ॥ त्वत्प्रसादान्मया प्राप्तं दीर्घसत्रसमुद्भवम् ॥ परिपूर्णफलं ब्रह्मन्दुर्लभं सर्वमानवैः ॥ २३ ॥ तथा जातिः पुनर्लब्धा भूयो नष्टापि सन्मुने ॥ त्वत्प्रसादेन विप्रर्षे चंडालत्वं प्रणाशितम् ॥ २४ ॥ परं मे दुःखमेवैकं हृदि शल्यमिवार्पितम् ॥ अनेनैव शरीरेण यन्न प्राप्तं त्रिविष्टपम् ॥ २५ ॥ उपहासं करिष्यंति वसिष्ठस्य सुता मुने ॥ अद्य व्यर्थश्रमं श्रुत्वा मामप्राप्तं त्रिविष्टपम् ॥ २६ ॥ तथा तद्वचनं सत्यं वसिष्ठस्य व्यवस्थितम् ॥ यत्तेनोक्तं न यज्ञेन सदेहैर्गम्यते दिवि[1] ॥ २७ ॥ सोऽहं तपः करिष्यामि सांप्रतं वनमाश्रितः ॥ न करिष्यामि भूयोऽपि राज्यं पुत्रनिवेदितम् ॥ २८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये त्रिशंकूपाख्याने विश्वामित्रेण त्रिशंकोः सशरीरस्वर्गारोहणाय द्वादशवार्षिकयज्ञकरणंनाम पञ्चमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ तच्छ्रुत्वा वचनं तस्य त्रिशंकोर्मुनिपुंगवः ॥ विश्वामित्रोऽब्रवीद्वाक्यं किंचिल्लज्जासमन्वितः ॥ ॥ १ ॥ मा विषादं महीपाल विषयेऽत्र करिष्यसि ॥ अनेनैव शरीरेण त्वां नयिष्याम्यहं दिवम् ॥ २ ॥ तत्तत्कर्म करिष्यामि स्वर्गार्थे नृपसत्तम ॥ तवाभीष्टं करिष्यामि किं वा यास्यामि संक्षयम् ॥ ३ ॥ एवमुक्त्वा परं कोपं कृत्वोपरि दिवौकसाम् ॥ उवाच च ततो रौद्रं प्रत्यक्षं तस्य भूपतेः ॥ ४ ॥ यथा मया द्विजत्वं हि स्वयमेवार्जितं बलात् ॥ तथा सृष्टिं करिष्यामि स्वकीयां नात्र संशयः ॥ ५ ॥ ततस्तं स समालोक्य शंकरं शशिशेखरम् ॥ प्रणम्य विधिवद्भक्त्या स्तुतिं चक्रे महामुनिः ॥ ६ ॥ ॥ विश्वामित्र उवाच ॥ ॥ जय देव जयाचिंत्य जय पार्वतिवल्लभ ॥ जय कृष्ण जगन्नाथ जय कृष्ण जगद्गुरो ॥ ७ ॥ जयाचिंत्य जयामेय जयानंत जयाच्युत ॥ जयामर जयाजेय जयाव्यय सुरेश्वर ॥ ८ ॥ जय सर्वग सर्वेश जय सर्वसुराश्रय ॥ जय सर्वजनध्येय जय सर्वाघनाशन ॥ ९ ॥ त्वं धाता च विधाता च त्वं कर्ता त्वं च रक्षकः ॥ चतुर्विधस्य देवेश भूतग्रामस्य शंकर ॥ १० ॥ यथा तिलस्थितं तैलं यथा दधिगतं घृतम् ॥ तथैवाधिष्ठितं कृत्स्नं त्वया गुप्तेन वै जगत् ॥ ११ ॥ त्वं ब्रह्मा त्वं हृषीकेशस्त्वं शक्रस्त्वं हुताशनः ॥ त्वं यज्ञस्त्वं वषट्कारस्त्वमिन्दुस्त्वं दिवाकरः ॥ १२ ॥ अथवा बहुनोक्तेन किं स्तवेन तव प्रभो ॥ समासाद्देव वक्ष्यामि विभूतिं श्रुतिनोदिताम् ॥ १३ ॥ यत्किंचित्त्रिषु लोकेषु स्थावरं जंगमं विभो ॥ तत्सर्वं भवता व्याप्तं काष्ठं हव्यभुजा यथा ॥ १४ ॥ ॥ श्रीभगवानुवाच ॥ ॥ परितुष्टोऽस्मि भद्रं ते वरं प्रार्थय सन्मुने ॥ यत्ते हृदि स्थितं नित्यं सर्वं दास्याम्य

१ हृदि--इ० पा० ।

संशयम् ॥ १५ ॥ ॥ विश्वामित्र उवाच ॥ ॥ यदि तुष्टोसि देवेश यदि देयो वरो मम ॥ तन्मे स्यात्सृष्टिमाहात्म्यं त्वत्प्रसादान्महेश्वर ॥ १६ ॥ एवमस्त्विति तं चोक्त्वा भगवान्वृषभध्वजः ॥ सर्वैर्गणैः समायुक्तस्ततश्चादर्शनं गतः ॥ १७ ॥ विश्वामित्रोऽपि तत्रैव स्थितो ध्यानपरायणः ॥ चक्रे चतुर्विधां सृष्टिं स्पर्द्धया हंसगामिनः ॥ १८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये त्रिशंकूपाख्याने विश्वामित्रवरलब्धिर्नाम षष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ सूत उवाच ॥ ॥ तेनैवं ध्यायमानेन जलमाविश्य काम्यया ॥ सृष्टं संध्याद्वयं तच्च दृश्यतेऽद्यापि वै द्विजाः ॥ १ ॥ ततो देवगणाः सर्वे सृष्टास्तेन महात्मना ॥ वैमानिकाश्च ये केचिन्नक्षत्राणि ग्रहास्तथा ॥ २ ॥ मनुष्योरगरक्षांसि वीरुधो वृक्षसंयुताः ॥ सप्तर्षयो ध्रुवाद्याश्च ये चान्ये गगनेचराः ॥ ३ ॥ एवं हि भगवान्सृष्ट्वा विश्वामित्रः स मन्युमान् ॥ स्वकीयेष्वथ कृत्येषु योजयामास तांस्ततः ॥ ४ ॥ एतस्मिन्नेव काले तु द्वौ सूर्यौ युगपद्दिवि ॥ उदितौ रात्रिनाथौ च जाताश्च द्विगुणा ग्रहाः ॥ द्विगुणानि च भान्येव सह सप्तर्षिभिर्द्विजाः ॥ ५ ॥ एवं वियति ते सर्वे स्पर्द्धमानाः परस्परम् ॥ दृश्यंते द्विगुणीभूता जनविभ्रमकारकाः ॥ ६ ॥ एतस्मिन्नंतरे शक्रः सह सर्वैर्दिवालयैः ॥ जगाम तत्र यत्रास्ते भगवान्कमलासनः ॥ ७ ॥ प्रोवाचाथ प्रणम्योच्चैः कृतांजलिपुटः स्थितः ॥ स्तुतिं कृत्वा सुरैः सार्धं वेदोक्तैः स्तवनैर्द्विजाः ॥ ८ ॥ सृष्टिः कृता सुरश्रेष्ठ विश्वामित्रेण सांप्रतम् ॥ मनुष्ययक्षसर्पाणां देवगंधर्वरक्षसाम् ॥ ९ ॥ तस्माद्वारय तं गत्वा स्वयमेव पितामह ॥ यावन्न व्याप्यते सर्वं तत्सृष्ट्येदं चराचरम् ॥ १० ॥ तस्य तद्वचनं श्रुत्वा तेनैव सहितो विधिः ॥ गत्वोवाच जगन्मित्रं विश्वामित्रं मुनीश्वरम् ॥ ११ ॥ निवृत्तिं कुरु विप्रर्षे सांप्रतं वचनान्मम ॥ सृष्टे र्यावन्न नश्यंति सर्वे देवाः सवासवाः ॥ १२ ॥ ॥ विश्वामित्र उवाच ॥ ॥ अनेनैव शरीरेण त्रिशंकुर्नृपसत्तमः॥ यदि गच्छति ते लोके तत्सृष्टिं न करोम्यहम् ॥ १३ ॥ ॥ ब्रह्मोवाच ॥ ॥ एष गच्छतु भूपालो मया सह त्रिविष्टपम् ॥ अनेनैव शरीरेण त्वत्प्रसादान्मुनीश्वर ॥ १४ ॥ विरामं कुरु सृष्टेस्त्वं नैतदन्यः करिष्यति ॥ न कृतं केनचिल्लोके तत्कर्म भवता कृतम् ॥ १५ ॥ ॥ विश्वामित्र उवाच ॥ ॥ त्मया कोपयुक्तेन कृतेयं सृष्टिरब्जज ॥ तत्क्षंतव्यं त्वया देव सर्वलोकपितामह ॥१६॥ तथाऽक्षयास्तु मे देव सृष्टिस्तव प्रसादतः ॥ या कृता न करिष्यामि भूयोऽन्यां पद्मसंभव ॥ १७ ॥ ॥ ब्रह्मोवाच ॥ ॥ भविष्यति ध्रुवा विप्र सृष्टियो भवता कृता ॥ परं सर्वेषु कृत्येषु यज्ञार्हा न भविष्यति ॥ १८ ॥ एव

१ तत्--तर्हि--इत्यर्थः ।

मुक्का समादाय त्रिशंकुं प्रपितामहः ॥ ब्रह्मलोकं गतो हृष्टो मुनिस्तत्रैव संस्थितः ॥ ११ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखंडे हाटकेश्वरक्षेत्रमाहात्म्ये त्रिशंकूपाख्याने त्रिशंकुस्वर्गप्राप्तिवर्णनंनाम सप्तमोऽध्यायः ॥७॥ ॥छ॥ ॥ सूत उवाच ॥ ॥ एवं स्वर्गमनुप्राप्ते त्रिशंकौ नृपसत्तमे ॥ सशरीरे द्विजश्रेष्ठा विश्वामित्रसमुद्यमात् ॥ १ ॥ तत्तीर्थं ख्यातिमायातं समस्ते भुवनत्रये ॥ ततःप्रभृति लोकानां धर्मकामार्थमोक्षदम् ॥ २ ॥ अस्पृष्टं कलिदोषेण तथान्यैरुपपातकैः ॥ ब्रह्महत्यादिकैश्चैव त्रिपुरारेः प्रभावतः ॥ ३ ॥ यस्तत्र त्यजति प्राणाञ्छ्रद्धायुक्तेन चेतसा ॥ स मोक्षमाप्नुयान्मर्त्यो यद्यपि स्यात्सुपापकृत् ॥ ४ ॥ कृमिपक्षिपतंगा ये पशवः पक्षिणो मृगाः ॥ तेऽपि तत्र मृता यांति शिवलोकमसंशयम् ॥ ५ ॥ स्नानं ये तत्र कुर्वंति श्रद्धापूतेन चेतसा ॥ त्रिशंकुरिव ते स्वर्गं प्रयांत्यपि विधर्मिणः ॥ ६ ॥ घर्मार्त्ता वा तृषार्ता वा येऽवगाहंति तज्जलम् ॥ तेऽपि यांति परं स्थानं यत्र देवो महेश्वरः ॥ ७ ॥ विश्वामित्रोऽपि तद्दृष्ट्वा तीर्थमाहात्म्यमुत्तमम् ॥ कुरुक्षेत्रं परित्यज्य तत्र वासमथाकरोत् ॥ ८ ॥ तथान्ये मुनयः शांतास्त्यक्त्वा तीर्थानि दूरतः॥ तत्राश्रमपदं कृत्वा प्रयाताः परमं पदम् ॥ ९ ॥ तथैव मनुजाः सर्वे दूरादागत्य सत्वराः ॥ तत्र स्नात्वा दिवं यांति कृत्वा पापशतान्यपि ॥ १० ॥ एवं तस्य प्रभावेण तीर्थस्य द्विजसत्तमाः ॥ गच्छमानेषु लोकेषु सुखेन त्रिदिवालयम् ॥ ११ ॥ अग्निष्टोमादिकाः सर्वाः समुच्छेदं गताः क्रियाः ॥ न कश्चिद्यजते मर्त्यो न व्रतं कुरुते नरः ॥ १२ ॥ न यच्छति तथा दानं न च तीर्थं निषेवते ॥ केवलं कुरुते स्नानं लिंगभेदे समाहितः ॥ १३ ॥ ततः प्रगच्छति स्वर्गं विमानवरमाश्रितः ॥ १४ ॥ ततः प्रपूरिताः सर्वे स्वर्गलोका नरैर्द्विजाः ॥ ब्रह्मविष्णुशिवेन्द्रादीन्स्पर्धमानैः सुरोत्तमान् ॥ १५ ॥ ततो देवगणाः सर्वे यज्ञभागविवर्जिताः ॥ कृच्छ्रं परमनुप्राप्ता मन्त्रं चक्रुः परस्परम् ॥ १६ ॥ हाटकेश्वरमाहात्म्यात्स्वर्गलोकः प्रपूरितः ॥ ऊर्ध्वबाहुभिराकीर्णः स्पर्धमानैः समंततः ॥ १७ ॥ तस्मात्तत्क्रियतां कर्म येनोच्छेदं प्रगच्छति ॥ तीर्थमेतद्धरापृष्ठे हाटकेश्वरसंज्ञितम् ॥ १८ ॥ ततः संवर्तको वायुः शक्रादेशात्समंततः ॥ तत्क्षेत्रं पूरयामास पांसुभिर्द्विजसत्तमाः ॥ १९ ॥ एवं नाशमनुप्राप्ते तस्मिंस्तीर्थे स्थलोच्चये ॥ जाते जाताः क्रियाः सर्वा भूयोऽपि ऋतुसंभवाः ॥ २० ॥ ततः कालेन महता वल्मीकः समपद्यत ॥ तस्मिन्क्षेत्रे स पाताले संप्रयातः शनैःशनैः ॥ २१ ॥ अथ पातालतो नागास्तेन मार्गेण कौतुकात् ॥ मर्त्यलोकं समायांति भ्रमंति च धरातले ॥ २२ ॥ तत्र ते मानवान्भोगान्भुक्त्वा चैव यथेच्छया ॥ पुनर्नियांति तेनैव मार्गेण निजमंदिरम् ॥ २३ ॥ ततो

१ सः—वल्मीकः—'वल्मीकं पुंनपुंसकम्'—इत्यमरः ।

नागबिलः ख्यातः स सर्वस्मिन्धरातले ॥ गतागतेन नगानां स वल्मीको द्विजोत्तमाः ॥ २४ ॥ कस्यचित्त्वथ कालस्य भगवान्पाकशासनः ॥
ब्रह्महत्यासमोपेतो निस्तेजाः समपद्यत ॥ २५ ॥ ततः पितामहादेशं लब्ध्वा मार्गेण तेन सः ॥ प्रविश्य चेक्षयामास पाताले हाट
केश्वरम् ॥ २६ ॥ अथाऽभूत्पापनिर्मुक्तस्तत्क्षणात्तस्य दर्शनात् ॥ तेजसा च समायुक्तः पुनः प्राप त्रिविष्टपम् ॥ २७ ॥ स दृष्ट्वा
तत्प्रभावं तल्लिंगं देवस्य शूलिनः ॥ हाटकेश्वरसंज्ञस्य भयं चक्रे नरोद्भवम् ॥ २८ ॥ यदि कश्चित्पुमानत्र त्रिशंकुरिव भूपतिः ॥
पूजयिष्यति तल्लिंगं विपाप्मा श्रद्धया सह ॥ २९ ॥ यापयिष्यति तन्नूनं मामस्मात्त्रिदशालयात् ॥ तस्मात्संपूरयाम्येनं मार्गं पाता
लसंभवम् ॥ ३० ॥ ततश्च त्वरया युक्तो रक्तशृंगं नगोत्तमम् ॥ प्रचिक्षेप बिले तस्मिन्स्वयमेव शतक्रतुः ॥ ३१ ॥ ॥ ऋषय ऊचुः ॥
॥ ॥ ब्रह्महत्या कथं जाता देवेन्द्रस्य महात्मनः ॥ कस्मिन्काले च सर्वं नो विस्तरात्सूत कीर्तय ॥ ३२ ॥ रक्तशृंगो गिरिः कोऽयं संक्षिप्तस्तत्र
तेन यः ॥ मानुषाणां भयं तस्य कतमस्य शचीपतेः ॥ ३३ ॥ ॥ सूत उवाच ॥ ॥ पुरा त्वष्टुर्द्विजश्रेष्ठा हिरण्यकशिपोः सुता ॥ विवा
हिता रमानाम श्रेष्ठरूपगुणान्विता ॥ ३४ ॥ अथ तस्या ययौ कालः सुप्रभूतः सुतं विना ॥ ततो वैराग्यसंपन्ना सुतार्थं तपसि स्थिता ॥
॥ ३५ ॥ ध्यायमाना सुराधीशं देवदेवं महेश्वरम् ॥ बलिपूजोपहारेण सम्यक्छ्रद्धासमन्विता ॥ ३६ ॥ नियता नियताहारा स्नानज
प्यपरायणा ॥ यच्छमाना द्विजाग्र्येभ्यो दानानि विविधानि च ॥ ३७ ॥ ततो वर्षसहस्रांते तस्यास्तुष्टो महेश्वरः ॥ उवाच वरदोऽस्मीति
वृणुष्व यदभीप्सितम् ॥ ३८ ॥ सा वव्रे मम पुत्रोऽस्तु भगवंस्त्वत्प्रसादतः ॥ शूरः श[1]ध्यश्च विप्रदानवरूपधृक् ॥ ३९ ॥ वेदाध्ययन
संपन्नो यज्ञकर्मसमुद्यतः ॥ तेजसा यशसा ख्यातः सर्वेषामपि देहिनाम् ॥ ४० ॥ ॥ भगवानुवाच ॥ ॥ भविष्यति न संदेहः पुत्रस्ते बलवा
न्सुधीः ॥ अवध्यः सर्वशस्त्राणां महातेजोभिरन्वितः ॥ ४१ ॥ यज्वा दानपतिः शूरो वेदवेदांगपारगः ॥ ब्राह्मणोक्ताः क्रियाः सर्वाः करिष्यति स
कृत्स्नशः ॥ अजेयः संगरे चैव कृत्स्नैरपि सुरासुरैः ॥ ४२ ॥ एवमुक्त्वा स देवेशस्ततश्चादर्शनं गतः ॥ ऋतौ सापि दधे गर्भं सकाशाद्विश्वकर्मणः ॥
॥ ४३ ॥ ततश्च सुषुवे पुत्रं दशमे मासि शोभनम् ॥ द्वादशार्कप्रतीकाशं सर्वलक्षणलक्षितम् ॥ ४४ ॥ तस्य चक्रे पिता नाम प्राप्ते द्वादशमे दिने ॥
प्रसिद्धं वृत्र इत्येव पूजयित्वा द्विजोत्तमान् ॥ ४५ ॥ अथासौ ववृधे बालः शुक्लपक्षे यथोडुराट् ॥ पितृमातृकृतानंदो बन्धुवर्गेण लालितः ॥ ४६ ॥

[1] शत्रेरवध्यश्च सदा—इ० पा० ।

ततोऽस्य प्रददौ काले व्रतं विप्रजनोचितम् ॥ समभ्येत्य स्वयं शुक्रो दानवस्यापि सद्द्विजः ॥ ४७ ॥ स चापि चतुरो वेदान्ब्रह्मचारिव्रते स्थितः ॥ वेदांगैः सहितान्वृत्रः पपाठ गुरुवत्सलः ॥ ४८ ॥ ततो यौवनमासाद्य भूमिपालानशेषतः ॥ जित्वा धरां वशे चक्रे पातालं तदनंतरम् ॥ ४९ ॥ ततश्चेंद्रजयाकांक्षी समासाद्य सुरालयम् ॥ सहस्राक्षसुखान्देवान्युद्धे चक्रे पराङ्मुखान् ॥ ५० ॥ अथ तेन समं वज्री चक्रेऽष्टादश संयुगान् ॥ एकस्मिन्नपि नो लेभे विजयं द्विजसत्तमाः ॥ ५१ ॥ हतशेषैः सुरैः सार्धं सर्वांगक्षतविक्षतैः ॥ ततो जगाम वित्रस्तो ब्रह्मलोकं दिवालयात् ॥ ५२ ॥ वृत्रोऽपि बुभुजे कृत्स्नं त्रैलोक्यं सचराचरम् ॥ शाक्रं पदं समास्थाय निहताशेषकंटकम् ॥ ५३ ॥ यज्ञभागभुजश्चक्रे दानवान्बलगर्वितान् ॥ देवस्थानेषु सर्वेषु यथोक्तेषु महाबलः ॥ ५४ ॥ एवं त्रैलोक्यराज्येऽपि लब्धे तस्य द्विजोत्तमाः ॥ न संतोषश्च संजज्ञे ब्रह्मलोकाभिकांक्षया ॥ ५५ ॥ ततः शुक्रं समाहूय प्रोवाच मधुरं वचः ॥ विनयावनतो भूत्वा चतुर्भिः सचिवैः सह ॥ ५६ ॥ ॥ वृत्र उवाच ॥ ॥ ब्रह्मलोकं गतः शक्रो भयाद्गुरुकुलोद्वह ॥ कथं गतिर्भवेत्तत्र मम ब्रूहि यथातथम् ॥ ५७ ॥ येन शक्रं विरिंचिं च सूदयिष्ये तथाखिलम् ॥ तुभ्यं दत्त्वा ब्रह्मलोकं भोक्ष्यामि त्रिदिवं स्वयम् ॥ ५८ ॥ ॥ शुक्र उवाच ॥ ॥ न गतिर्विद्यते तत्र तव दानवसत्तम ॥ तस्मात्त्रैलोक्यराज्येन संतोषं कर्तुमर्हसि ॥ ५९ ॥ ॥ वृत्र उवाच ॥ ॥ यावत्तिष्ठति सुत्रामा तावन्नास्ति सुखं मम ॥ तस्मान्निष्कंटकार्थाय यतिष्येऽहं द्विजोत्तम ॥ ६० ॥ कथं शक्रस्य संजाता गतिस्तत्र भृगूद्वह ॥ न भविष्यति मे ब्रूहि कथं साऽद्य महामते ॥ ६१ ॥ ॥ शुक्र उवाच ॥ ॥ तेन पूर्वं तपस्तप्तं नैमिषे दानवोत्तम ॥ यावद्वर्षसहस्रांतं ध्यायमानेन शंकरम् ॥ ६२ ॥ तत्प्रभावाद्गतिस्तस्य तत्र जाता सदैव हि ॥ सभृत्यपरिवारस्य नान्यदस्तीह कारणम् ॥ ६३ ॥ योऽन्योऽपि नैमिषारण्ये तद्रूपं कुरुते तपः ॥ ब्रह्मलोके गतिस्तस्य जायते नात्र संशयः ॥ ६४ ॥ ॥ सूत उवाच ॥ ॥ तच्छ्रुत्वा सत्वरं गत्वा नैमिषं तीर्थमुत्तमम् ॥ तपश्चक्रे ततस्तीव्रं ध्यायमानो महेश्वरम् ॥ ६५ ॥ त्रैलोक्यरक्षणार्थाय संनिरूप्य दनूत्तमान् ॥ महाबलसमोपेताञ्छक्राधिकपराक्रमान् ॥ ६६ ॥ वर्षास्वाकाशस्थायी स हेमन्ते सलिलाश्रयः ॥ पंचाग्निसाधको ग्रीष्मे स बभूवानिलाशनः ॥ ६७ ॥ एवं तस्य व्रतस्थस्य जग्मुर्वर्षशतानि च ॥ तत्रं भीतास्ततो देवा ब्रह्मविष्णुपुरःसराः ॥ ६८ ॥ चक्रुश्च सततं

१ व्रतम्—उपनयनसंस्कारम्—इत्यर्थः । २ सद्विजाः—इ०पा० । ३ विप्रैः—इ०पा० । तदा—'सह' इत्यध्याहर्तव्यम् । ४ शक्रः—इ०पा० । ५ असुरान्दानवांस्तथा—इ०पा०। ६ ब्रह्मलोके—इ०पा० । ७ गुरुकुलोद्वह—हे शुक्र—इत्यर्थः । ८ ब्रह्मलोकं प्रदायाथ—इ०पा० । ९ तप्यते—इ०पा० । १० ते च—इ०पा० ।

मंत्रं तद्विनाशाय केवलम् ॥ वीक्षयंति च च्छिद्राणि न च पश्यंति दुःखिताः ॥ ६९ ॥ अथाब्रवीत्स्वयं विष्णुश्चिरं निश्चित्य चेतसा ॥ वधोपायं समालोक्य वृत्रस्य प्रमुदान्वितः ॥ ७० ॥ ॥ विष्णुरुवाच ॥ ॥ तस्य शक्र वधोपायो मया ज्ञातोऽधुना ध्रुवम् ॥ तच्छ्रुत्वा कुरु शीघ्रं त्वमुपायो नास्ति कश्चन ॥ ७१ ॥ अवध्यः सर्वशस्त्राणां स कृतः शूलपाणिना ॥ तस्मादस्थिमयं वज्रं तद्वधार्थं निरूपय ॥ ७२ ॥ ॥ इन्द्र उवाच ॥ ॥ अस्थिभिः कस्य जीवस्य वज्रं देव भविष्यति ॥ गजस्य शरभस्याथ किं वान्यस्य वदस्व मे ॥ ७३ ॥ ॥ विष्णुरुवाच ॥ ॥ शतहस्तप्रमाणं तत्षडस्रि[2] च सुराधिप ॥ मध्ये क्षामं तु पार्श्वाभ्यां स्थूलं रौद्रसमाकृति ॥ ७४ ॥ ॥ इंद्र उवाच ॥ ॥ न तादृग्दृश्यते सत्त्वं त्रैलोक्येपि सुरेश्वर ॥ यस्यास्थिभिर्विधीयेत वज्रमेवंविधाकृति ॥ ७५ ॥ ॥ विष्णुरुवाच ॥ ॥ दधीचिर्नाम विप्रोऽस्ति तपः परममास्थितः ॥ द्विगुणं च तथा दीर्घः सरस्वत्यां कृताश्रमः ॥ ७६ ॥ तं गत्वा प्रार्थयाशु त्वं स्वान्यस्थीनि प्रदास्यति ॥ नादेयं विद्यते किंचित्तस्य संप्रार्थितस्य हि ॥ ७७ ॥ ततः शक्रः सुरैः सार्धं गत्वा तस्य तदाश्रमम् ॥ प्राचीसरस्वतीतीरे पुष्करे द्विजसत्तमाः ॥ ७८ ॥ अथ देवान्समालोक्य संप्राप्तान्निजमंदिरे ॥ दधीचिः संप्रहृष्टात्मा सत्वरः संमुखं ययौ ॥ ७९ ॥ स प्रणम्य सहस्राक्षं तथान्यानपि सन्मुनिः ॥ अर्घ्यादिभिस्ततः पूजां चक्रे तेषां ततः परम् ॥ ८० ॥ ततः प्रोवाच हृष्टात्मा विनयावनतः स्थितः ॥ स्वयमेव सहस्राक्षं प्रणिपत्य मुहुर्मुहुः ॥ ८१ ॥ ॥ ॥ दधीचिरुवाच ॥ ॥ किमर्थमागता देवाः कृत्यं चाशु निवेद्यताम् ॥ धन्योऽहमागतो यस्य गृहे त्वं बलसूदन[3] ॥ ८२ ॥ ॥ शक्र उवाच ॥ ॥ वृत्रेण निर्जिताः सर्वे वयं ब्राह्मणसत्तम ॥ स वध्यो नाह शस्त्राणां सर्वेषां वरपुष्टितः ॥ ८३ ॥ सोऽस्थिसंभववज्रस्य वध्यः स्यादब्रवीद्धरिः ॥ शतहस्तप्रमाणस्य न च जीवोस्ति[4] तादृशः ॥ ८४ ॥ त्वां मुक्त्वा ब्राह्मणश्रेष्ठ तस्मादस्थीनि यच्छ नः ॥ स्वकीयानि भवेद्येन वज्रं तस्य विनाशकम् ॥ ८५ ॥ कुरु कृत्यं द्विजश्रेष्ठ देवानामार्तिनाशनम् ॥ अन्यथा विबुधाः सर्वे नाशं यास्यंति कृत्स्नशः ॥ ८६ ॥ ॥ सूत उवाच ॥ तच्छ्रुत्वा संप्रहृष्टात्मा दधीचिर्भगवान्मुनिः ॥ अत्यजज्जीवितं तेषां हितार्थाय दिवौकसाम् ॥ ८७ ॥ ततो देवाः प्रहृष्टास्ते गृहीत्वास्थीनि कृत्स्नशः ॥ तत[5]श्चक्रुर्महावज्रं यादृशं विष्णुनोदितम्[6] ॥ ८८ ॥ अथ शक्रस्तदादाय नैमिषाभिमुखो ययौ ॥ भयेन महता युक्तो वेपमानो निशा

१ तस्य नाशाय--इ० पा० । २ षडस्रि--षट्कोणम्--इत्यर्थः । ३ बलिसूदन--इ०, मधुसूदन--इ० च पा० परं मूलस्थ एव पाठः शक्रविशेषणत्वात्समीचीनः । ४ जातोऽस्ति--इ० पा० । ५ पुष्पम्--इ० पा० । ६ विष्णुना उदितम्--इति पदच्छेदः ।

गमे ॥ ८९ ॥ तत्र ध्यानस्थितं वृत्रं दूरस्थस्त्रिदशाधिपः ॥ वज्रेण ताडयामास पलायनपरायणः ॥ ९० ॥ सोऽपि वज्रप्रहारेण भस्मसात्सम पद्यत ॥ वृत्रो दानवशार्दूलो वह्निं प्राप्य पतंगवत् ॥ ९१ ॥ शक्रोऽपि भयसंत्रस्तो गत्वा सागरमध्यगम् ॥ पर्वतं सुदुरारोहं तुंगशृंगं समाश्रितः ॥ ॥ ९२ ॥ न जानाति हतं वृत्रं वज्रघातेन तेन तम् ॥ केवलं वीक्षते मार्गं वृत्रागमनसंभवम् ॥ ९३ ॥ एतस्मिन्नंतरे देवाः संप्रहृष्टतनूरुहाः ॥ वृत्रं विनिहतं दृष्ट्वा तुष्टुवुस्त्रिदशाधिपम् ॥ ९४ ॥ न जानंति भयान्नष्टं तस्मिन्सागरपर्वते ॥ अन्विष्य चिरकालेन कृच्छ्रात्संप्राप्य तं ततः॥ ९५ ॥ वीक्षांचक्रुः समासीनं विषमे गिरिगह्वरे ॥ तेजोहीनं तथा दीनं ब्रह्महत्यापरिप्लुतम् ॥ ९६ ॥ गात्रदुर्गंधितासंगैः पूरयन्तं दिशो दश ॥ ९७ ॥ अथोवाच चतुर्वक्रो दृष्ट्वा शक्रं तथाविधम् ॥ समस्तान्देवसंघातान्दूरस्थः पापशंकया ॥ ९८ ॥ शक्रोऽयं विबुधश्रेष्ठा ब्रह्महत्यापरिप्लुतः ॥ तस्मात्त्याज्यः सुदूरेण नो चेत्पापमवाप्स्यथ ॥ ९९ ॥ पश्यध्वं सर्वलिंगानि ब्रह्महत्यान्वितानि च ॥ अस्य गात्रेषु दृश्यंते तस्माद्गच्छामहे दिवि ॥ १०० ॥ पितामहमुखान्दृष्ट्वा देवान्प्राप्तान्सुराधिपः ॥ पराङ्मुखानकस्माच्च संजातान्विस्मयान्वितः ॥१०१॥ ततः प्रोवाच संभ्रांतः किमिदं गम्यते सुराः ॥ दृष्ट्वापि मामनाभाष्य कच्चित्क्षेमं गृहे मम ॥ १०२ ॥ कच्चित्स निहतस्तेन मम वज्रेण दानवः ॥ कच्चिन्न मां स युद्धार्थमन्वेषयति दुर्मतिः ॥ १०३ ॥ ॥ ब्रह्मोवाच ॥ ॥ निहतः स त्वया शक्र तेन वज्रेण दानवः ॥ गतो मृत्युवशं पापो न भयं कर्तुमर्हसि ॥ १०४ ॥ परं तस्य वधाज्जाता ब्रह्महत्या सुगर्हिता ॥ तव शक्र न तेनाद्य स्पृशामोऽस्पृश्यतां गतम् ॥ १०५ ॥ ॥ इन्द्र उवाच ॥ ॥ मया विनिहताः पूर्वं बहवः किल दानवाः ॥ ब्रह्महत्या न संजाता मम हत्याधुना कथम् ॥ १०६ ॥ ॥ ब्रह्मोवाच ॥ ॥ ते त्वया निहता युद्धे क्षात्रधर्मेण वासव ॥ विशुद्धा दानवाः सर्वे तेन जातं न पातकम् ॥ १०७ ॥ एष यज्ञोपवीताढ्यो विशेषात्तपसि स्थितः ॥ छलेन निहतः शक्र तेन त्वं पापसंयुतः ॥ १०८ ॥ ॥ इन्द्र उवाच ॥ ॥ जानाम्यहं चतुर्वक्र स्वं कायं पापसंयुतम् ॥ चिह्नैर्ब्रह्मवधोद्भूतैस्तस्माच्छुद्धिं वदस्व मे ॥ १०९ ॥ यया यानि द्रुतं पापं ब्रह्महत्यासमुद्भवम् ॥ स्पृश्यो भवामि सर्वेषां देवानां प्रपितामह ॥ ११० ॥ ॥ ब्रह्मोवाच ॥ ॥ तीर्थयात्रां सुरश्रेष्ठ तदर्थं कर्तुमर्हसि ॥ तयां विना न ते पापं नाशमायाति कृत्स्नशः ॥ १११ ॥ ॥ सूत उवाच ॥ ॥ ततस्तद्वचनाच्छक्रस्तीर्थयात्रापरायणः ॥ बभ्राम सकलां पृथ्वीं

---

१ ततो वज्रप्रहारेण—इ० पा० । २ तं किल—इ० पा० । ३ परस्मैपदमार्षम्—वीक्षांचक्रिरे—इत्यपेक्षितम् । ४ देवा ऊचुः—इ० पा० । ५ त्वाम्—इति शेषः । ६ तदा जाता—इ० पा० । ७ तया विना—तीर्थयात्रया विना—इत्यर्थः । तस्माद्विना—इ० पा० । ८ तद्वचनं श्रुत्वा—इ० पा० ।

स्नानं कुर्वन्पृथक्पृथक् ॥ ११२ ॥ तीर्थेषु सुप्रसिद्धेषु नदीनदयुतेषु च ॥ वाराणस्यां प्रयागे च प्रभासे कुरुजांगले ॥ ११३ ॥ तथान्येषु सहस्राक्षो विपाप्मा न व्यजायत ॥ ततो वैराग्यमापन्नश्चिन्तयामास चेतसि ॥११४॥ अहं स्नातः समस्तेषु तीर्थेषु धरणीतले ॥ न च पापेन निर्मुक्तः किं करोमि च सांप्रतम् ॥ ११५ ॥ किं पतामि गिरेः शृंगाद्विषं वा भक्षयामि किम् ॥ त्रैलोक्यराज्यविभ्रष्टो नाहं जीवितुमुत्सहे ॥ ११६ ॥ एवं वैराग्यमापन्नो गिरिमारुह्य वासवः ॥ यावत्क्षिपति चात्मानं मरणे कृतनिश्चयः ॥ ११७ ॥ तावद्देवोत्थिता वाणी गगनाद्द्विजसत्तमाः ॥ मा शक्र साहसं कार्षीर्वैराग्यं प्राप्य चेतसि ॥ ११८ ॥ त्वया राज्यं प्रकर्तव्यं स्वर्गेऽद्यापि युगाष्टकम् ॥ तस्मात्पापविशुद्ध्यर्थं शृणु शक्र समाहितः ॥ ११९ ॥ कुरुष्व वचनं शीघ्रं भावनीयं[1] न चान्यथा ॥ यत्त्वया पांसुभिः पूर्वं विवरः परिपूरितः[2] ॥ १२० ॥ हाटकेश्वरजे क्षेत्रे यत्र देवः स्वयं हरः ॥ तत्र नागबिलो जातो वल्मीकात्त्रिदशाधिप ॥ १२१ ॥ येन नागा धरापृष्ठे निर्गच्छंति व्रजंति च ॥ तेन मार्गेण गत्वा त्वं पाताले हाटकेश्वरम् ॥ स्नात्वा पातालगंगायां पूजयस्व[3] महेश्वरम् ॥ १२२ ॥ ततः पापविनिर्मुक्तो भविष्यसि न संशयः ॥ संप्राप्स्यसि च भूयोऽपि देवराज्यमकण्टकम् ॥ १२३ ॥ ॥ सूत उवाच ॥ ॥ अथ शक्रः समाकर्ण्य तां गिरं गगनोत्थिताम् ॥ जगाम सत्वरं तत्र यत्र नागबिलः स च ॥ १२४ ॥ ततः प्रविश्य पातालं गंगातोयपरिप्लुतः ॥ पूजयामास तल्लिंगं हाटकेश्वरसंज्ञितम् ॥ १२५ ॥ अथ तस्य क्षणाज्जातं शरीरं मलवर्जितम ॥ दुर्गन्धश्च गतो नाशं तेजोवृद्धिर्बभूव ह ॥ १२६ ॥ एतस्मिन्नंतरे प्राप्ता ब्रह्मविष्णुमुखाः सुराः ॥ प्रोचुश्च देवराजं तं मुक्तपापं प्रहर्षिताः ॥ १२७ ॥ प्राप्तस्तु मेध्यतां शक्र विमुक्तो ब्रह्महत्यया ॥ तस्मादागच्छ[4] गच्छामः सहितास्त्रिदशालयम् ॥ १२८ ॥ एतन्नाग बिलं शक्र पुनः पूरय पांसुभिः ॥ नो चेदागत्य यानेन मानुषाः सिद्धिहेतवः ॥ १२९ ॥ एतल्लिंगं समभ्यर्च्य स्नात्वा भागीरथीजले ॥ अपि पापसमायुक्ता यास्यंति परमां गतिम् ॥ १३० ॥ ततस्ते त्रिदशाः सर्वे स च देवं शतक्रतुः ॥ प्रणिपत्य पुनः प्रोचैः प्रजग्मुस्त्रिदशालयम् ॥१३१॥ ततो जज्ञे महांस्तत्र स्वर्गे वृत्रवधोत्सवः ॥ देवेन्द्रत्वमनुप्राप्ते पुनः शक्रे द्विजोत्तमाः ॥ १३२ ॥ ॥ सूत उवाच ॥ ॥ एतद्वः सर्वमाख्यातं हाटकेश्वरसंभवम् ॥ माहात्म्यं ब्राह्मणश्रेष्ठाः सर्वपातकनाशनम ॥ १३३ ॥ यश्चैतत्कीर्तयेद्भक्त्या शृणोति च समाहितः ॥ स याति परमं स्थानं जरा

१ पावनीयम्–इ० पा० । २ पूरितस्तदा–इ० पा० । ३ तं पूजय–इ० पा० । ४ गच्छ महाभाग–इ०पा० ।

मरणवर्जितम् ॥ १३४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां षष्ठे नागरखण्डे हाटकेश्वरक्षेत्रमाहात्म्ये वृत्रवधवर्णनंनामाष्टमो ऽध्यायः ॥ ८ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ अथ शक्रः समाहूय प्रोचे संवर्तकानिलम् ॥ हाटकेश्वरजे क्षेत्रे महान्नागबिलोऽस्ति वै ॥ १ ॥ तं पूरय ममादेशाद्द्रुतं गत्वाऽभिपांसुभिः ॥ येन न स्याद्गतिस्तत्र कस्यचिन्मृत्युधर्मिणः ॥२॥ ॥ वायुरुवाच ॥ ॥ तवादेशान्मया पूर्वं पूरितो विवरो यदा ॥ लिंगोद्भवस्तदा शापः प्रदत्तो मे पुरारिणा ॥ ३ ॥ यस्माल्लिंगं ममैतद्वै त्वया पांसुभिरावृतम् ॥ तस्मात्समानधर्मा त्वं गन्धवाहो भविष्यसि ॥ ४ ॥ यद्वत्कर्पूरजं गन्धं समग्रं त्वं हि वक्ष्यसि ॥ अमेध्यसंभवं तद्वन्मम वाक्यादसंशयम् ॥५॥ तस्मात्कुरु प्रसादं मे विदित्वैतत्सुरेश्वर ॥ कृत्येऽस्मिन्स्म र्यतामन्यस्त्रिपुरारेर्बिभेम्यहम् ॥६॥ ततः संचिंतयामास पूरणं त्रिदशाधिपः ॥ तस्य नागबिलस्यैव नैव किंचिदवैक्षत ॥७॥ ततस्तं प्राह देवेज्यः स्वय मेव शतक्रतुम् ॥ कस्मात्त्वं व्याकुलीभूतः कृत्येऽस्मिंस्त्रिदशाधिप ॥ ८ ॥ अस्ति पर्वतमुख्योऽत्र नाम्ना ख्यातो हिमालयः ॥ तस्य पुत्रत्रयं जातं तच्च शक्र शृणुष्व मे ॥ ९ ॥ मैनाकः प्रथमः प्रोक्तो द्वितीयो नंदिवर्धनः ॥ रक्तशृंगस्तृतीयस्तु पर्वतः परिकीर्तितः ॥ १० ॥ स मैनाकः समुद्रांतः प्रविष्टः शक्र ते भयात् ॥ पक्षाभ्यां सहितोऽद्यापि स तत्रैव व्यवस्थितः ॥ ११ ॥ नंदिवर्धन इत्येषं द्वितीयः परिकीर्तितः ॥ वसिष्ठाश्रमजो रन्ध्रस्ते न कृत्स्नः प्रपूरितः ॥ १२ ॥ हिमाचलसमादेशाद्वसिष्ठस्य च सन्मुनेः ॥ देवभूमिं परित्यज्य स गतस्तत्र सत्वरम् ॥ १३ ॥ तृतीयस्ति ष्ठतेऽद्यापि रक्तशृंगः स्मृतोऽत्र यः ॥ तमानय सहस्राक्ष बिलं सार्पं प्रपूरय ॥ १४ ॥ नान्यथा पूरितुं शक्यो बिलोऽयं त्रिदशाधिप ॥ तं मुक्त्वा पर्वत श्रेष्ठं सत्यमेतन्मयोदितम् ॥ १५ ॥ ॥ सूत उवाच ॥ तच्छ्रुत्वा देवपूज्यस्य वचनं त्रिदशाधिपः ॥ जगाम सत्वरं तत्र स[1] यत्रास्ते हिमालयः ॥ ॥ १६ ॥ ततः प्रोवाच तं गत्वा सामपूर्वमिदं वचः ॥ हिमाचलं गिरिश्रेष्ठं सिद्धचारणसेवितम् ॥ १७ ॥ ॥ इन्द्र उवाच ॥ ॥ हाटकेश्वरजे क्षेत्रे महान्नागबिलः स्थितः ॥ तेन गत्वा नरा देवं[2] पाताले हाटकेश्वरम् ॥ १८ ॥ पूजयिष्यंति ये केचिदपि पापपरायणाः ॥ मया सार्धं करिष्यंति ततः स्पर्द्धां नगोत्तम ॥ १९ ॥ तस्मात्पुत्रमिमं तत्र रक्तशृंगं हिमालय ॥ प्रेषयस्व बिलो येन पूर्यते सोऽहिसंभवः ॥ २० ॥ कुरुष्व त्वं ममातिथ्यं गृहप्राप्तस्य पर्वत ॥ आत्मपुत्रप्रदानेन कीर्तिं प्राप्स्यस्यलौकिकीम् ॥ २१ ॥ बाढमित्येव सोऽप्युक्त्वा पूजयित्वा च देवपम् ॥ ततः प्रोवाच तं पुत्रं रक्तशृंगं हिमालयः ॥ २२ ॥ तवार्थाय सहस्राक्षः पुत्र प्राप्तो ममांतिकम् ॥ तस्माद्गच्छ द्रुतं तत्र यत्र नागबिलः स्थितः ॥ २३ ॥ पूरयित्वा

१ एत्र-इ० पा० । २ शतक्रतुर्हिमाचलम्-इ० पा० ।

ममादेशात्तं त्वं शक्रस्य कृत्स्नशः ॥ सुखीभव सहानेन तथान्यैः सुरसत्तमैः ॥ २४ ॥ ॥ रक्तशृंग उवाच ॥ ॥ नाहं तत्र गमिष्यामि मर्त्ये भूमौ कथंचन ॥ यत्र कण्टकिनो वृक्षा रूक्षाः फलविवर्जिताः ॥ २५ ॥ न सिद्धा न च गंधर्वा न देवा न च किंनराः ॥ नच तीर्थानि रम्याणि न नद्यो विमलोदकाः ॥ २६ ॥ तथा पापसमाचारा मनुष्याः शीलवर्जिताः ॥ दुष्टचित्ताः सदा सर्वे तिर्यग्योनिगता अपि ॥ २७ ॥ तथा मम नगश्रेष्ठ पक्षौ द्वावपि कर्तितौ ॥ शक्रेण तेन नो शक्तिर्गंतुमस्ति कथंचन ॥ २८ ॥ तस्मात्कंचित्सहस्राक्ष उपायं तत्कृते परम् ॥ चिंतयत्वेव मां मुक्त्वा सत्यमेतन्मयोदितम् ॥ २९ ॥ ॥ शक्र उवाच ॥ ॥ अहं त्वां तत्र नेष्यामि स्वहस्तेन विदारितम् ॥ तत्रापि सुशुभा वृक्षा भविष्यंति तवाश्रयाः ॥ ३० ॥ तथा पुण्यानि तीर्थानि देवतायतनानि च ॥ समंतात्ते भविष्यंति मुनीनामाश्रमास्तथा ॥ ३१ ॥ अत्रस्थस्य प्रभावो यस्तव पर्वतनंदन ॥ मद्वाक्यात्तत्र संस्थस्य कोटिसंख्यो भविष्यति ॥ ३२ ॥ तथा ये मानवास्तत्र पापात्मानोऽपि भूतले ॥ विपाप्मानो भविष्यंति सहसा तव दर्शनात् ॥ ३३ ॥ तस्माद्गच्छ द्रुतं तत्र मया सार्धं नगात्मज ॥ न चेद्वज्रप्रहारेण करिष्यामि सहस्रधा ॥ ३४ ॥ ॥ सूत उवाच ॥ ॥ तस्य तद्वचनं श्रुत्वा रक्तशृंगो भयान्वितः ॥ प्रविष्टः सहसागत्य तस्मिन्नागबिले गतः ॥ ३५ ॥ निमग्नो ब्राह्मणश्रेष्ठा नासाग्रं यावदेव हि ॥ शृंगैर्मनोरमैस्तुंगैः समग्रैः सहितस्तदा ॥ वृक्षगुल्मलताकीर्णै रम्यपक्षिनिषेवितैः ॥ ३६ ॥ एवं संस्थाप्य तं शक्रो हिमाचलसुतं नगम् ॥ ततः प्रोवाच सहृष्टो वरो मत्तः प्रगृह्यताम् ॥ ३७ ॥ ॥ रक्तशृंग उवाच ॥ ॥ एष एव वरोऽस्माकं यत्त्वं तुष्टः सुरेश्वर ॥ किं वरेण करिष्यामि त्वत्प्रसादादहं सुखी ॥ ३८ ॥ ॥ ॥ इन्द्र उवाच ॥ ॥ न वृथा दर्शनं मे स्यादपि स्वप्ने नगात्मज ॥ किं पुनर्दर्शने जाते कृते कृत्ये विशेषतः ॥ ३९ ॥ ॥ रक्तशृंग उवाच ॥ ॥ अवश्यं यदि देयो मे वरः सर्वसुराधिप ॥ विभवो मे द्विजार्थाय सर्वः स्यात्सर्वदा विभो ॥ ४० ॥ ॥ इन्द्र उवाच ॥ ॥ भविष्यति महीपालश्चमत्कार इति स्मृतः ॥ तव मूर्धनि विप्रार्थं स पुरं स्थापयिष्यति ॥ ४१ ॥ तत्र ब्राह्मणशार्दूला वेदवेदांगपारगाः ॥ विभवं तव निःशेषं भजिष्यंति प्रहर्षिताः ॥ ४२ ॥ तथाहं चैत्रमासस्य चतुर्दश्यां नगात्मज ॥ कृष्णायां स्वयमागत्य शृंगे मुख्यतमे तव ॥ ४३ ॥ पूजयिष्यामि देवेशं हाटकेश्वरसंज्ञितम् ॥ सर्वैर्देवगणैः सार्धं तथा किंनरगुह्यकैः ॥ ४४ ॥ तमेकं दिवसं चात्र शृंगे तव हरः स्वयम् ॥ अस्माभिः संस्तुतस्तुष्टो निवासं प्रकरिष्यति ॥ ४५ ॥ प्रभावस्तेन ते मुख्यस्त्रैलोक्येऽपि भविष्यति ॥ स्वस्ति तेऽस्तु गमिष्यामि सांप्रतं त्रिदिवालयम् ॥ ४६ ॥ ॥ सूत उवाच ॥ ॥ एवमुक्त्वा सहस्राक्षस्ततः प्राप्तस्त्रिविष्टपम् ॥ रक्त

